चौखम्बा स्तोत्र ग्रन्थमाला

५

# ॥ आंजनेयसहस्रनामस्तोत्रम् ॥

## (नामावलीसहितम्)

चौखम्बा संस्कृत प्रतिष्ठान : दिल्ली

मूल्य १०.००

॥ श्रीरस्तु ॥

# ॥ आंजनेयसहस्रनामस्तोत्रम् ॥

## ( नामावळीसहितम् )




चौखम्बा संस्कृत प्रतिष्ठान

३८ यू० ए० बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

॥ श्रीरस्तु ॥

श्रीरामाय नमः

# ॥ श्रीहनुमत्कवचप्रारम्भः ॥



हरिः ओम्

एकदा सुखमासीनं शङ्करं लोकशङ्करम् ।
पप्रच्छ पार्वती भक्त्या कर्पूरधवलं शुभम् ॥

श्रीपार्वत्युवाच—

भगवन् देवदेवेश शम्भो शङ्कर शाश्वत।
महादेव जगन्नाथ शिव विश्वार्तिहारक ॥ १
संग्रामे सङ्कटे घोरे भूतप्रेतादिके भये।
दुःखदावाग्निसन्तप्ते बन्धने व्याधिसङ्कुले ॥ २
दारिद्र्ये महति प्राप्ते कुष्ठरोगे ज्वरे भ्रमे।
चातुर्थिके सन्निपाते वाते पित्ते कफे तथा ॥ ३
शोकाकुलेषु मर्त्येषु केन रक्षा भवेद्ध्रुवम्।

श्रीरुद्र उवाच—

शृणु देवि प्रवक्ष्यामि लोकानां हितकाम्यया ।
विभीषणाय रामेण प्रेम्णा दत्तञ्च यत्पुरा ॥ ४

कवचं कपिनाथस्य वायुपुत्रस्य धीमतः ।
तद्गुह्यं सम्प्रवक्ष्यामि विशेषाच्छृणु सुन्दरि ॥ ५

उद्यदादित्यसङ्काशमुदारभुजविक्रमम् ।
कन्दर्पकोटिलावण्यं सर्वविद्याविशारदम् ॥ ६

श्रीरामहृदयानन्दं भक्तकल्पमहीरुहम् ।
अभयं वरदं दोर्भ्यां कलये मारुतात्मजम् ॥ ७

श्रीरामरामरामेति रमे रामे मनोरमे ।

सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ८

उल्लंघ्य सिन्धोस्सलिलं सलीलं यश्शोकवह्निं जनकात्मजायाः ।
आदाय तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥ ९

मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ १०

अस्य श्रीहनुमत्कवचस्तोत्रमहामन्त्रस्य श्रीरामचन्द्र ऋषिः वीरहनुमान् देवता
अनुष्टुप्छन्दः श्रीरामदूतप्रीत्यर्थे जपे विनियोगः ॥



---

## ध्यानम् ॥

हनूमानञ्जनासूनुर्वायुपुत्रो महाबलः ।
रामेष्टः फल्गुनसखः पिङ्गाक्षोऽमितविक्रमः ॥ १
उदधिक्रमणश्चैव सीताशोकविनाशनः ।
लक्ष्मणप्राणदाता च दशग्रीवस्य दर्पहा ॥ २
द्वादशैतानि नामनि कपीन्द्रस्य महात्मनः ।
स्वापकाले पठेन्नित्यं यात्राकाले विशेषतः ॥ ३
तस्य मृत्युभयं नास्ति सर्वत्र विजयी भवेत् ।
स्फाटिकाभं स्वर्णकान्तिं द्विभुजञ्च कृताञ्जलिम् ॥ ४
कुण्डलद्वयसंशोभिमुखाम्भोजं हरिं भजेत् ॥ ५

आञ्जनेयमतिपाटलाननं काञ्चनाद्रिकमनीयविग्रहम् ।
पारिजाततरुमूलवासिनं भावयामि पवमाननन्दनम् ॥ ६

यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
बाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥ ७

विजयं लभते सत्यं परं सौख्यमवाप्नुयात् ।
भूतप्रेतपिशाचाद्य ब्रह्मराक्षसदर्शने ॥ ८

सिंहव्याघ्रभये प्राप्ते शत्रुशस्त्रास्त्रपञ्जरे ।

दुःखे महारणे चैव पिशाचग्रहपातके ॥ ९

शतवारं पठेन्नित्यं मण्डलं भक्तितत्परः ।
सर्वसौख्यमवाप्नोति त्रिसन्ध्यं रामपोषितः ॥ १०

अपराजित पिङ्गाक्ष नमस्ते रामपूजित ;
प्रस्थानञ्च करिष्यामि सिद्धिर्भवतु मे सदा ॥ ११

आयुः प्रज्ञायशोलक्ष्मीश्रद्धापुत्रास्सुशीलता ।
आरोग्यं देहसौख्यञ्च कपिनाथ नमोऽस्तु ते ॥ १२

दीने मयि दयां कृत्वा मम दुःखं विनाशय ।
ऐश्वर्यं पुत्रलाभञ्च लक्ष्मीं देहि सदा प्रभो ॥ १३

त्वत्पादपङ्कजद्वन्द्वं विना नान्यं भजाम्यहं ।
न्यूनातिरिक्तं यत्किञ्चित्तत्सर्वं क्षन्तुमर्हसि ॥ १४

माता त्वञ्च पिता त्वञ्च भ्राता त्वञ्च प्रभुर्मम ।
त्वामेव शरणं प्राप्तं रक्ष मां करुणानिधे ॥ १५

नानाविघ्नांश्च रोगांश्च नाशय त्वं सदा मम ।
त्रिलक्षं हनुमन्नाम यो जपेद्भक्तितत्परः ॥ १६

राजद्वारे महाघोरे भयं नैवारिसङ्कटे ।
ब्रह्मराक्षसभूतानां भयक्लेशो न विद्यते ॥ १७

श्रीसीतालक्ष्मणभरतशत्रुघ्नहनुमत्समेत श्रीरामचन्द्रपरब्रह्मार्पणमस्तु

॥ श्रीः ॥

श्रीरामचन्द्रपरब्रह्मणे नमः ॥

# ॥ श्रीमदांजनेयसहस्रनामश्लोकाः ॥



हनुमान् श्रीप्रदो वायुपुत्त्रो रुद्रोऽनघोऽजरः ।
अमृत्युर्वीरवीरश्च ग्रामावासो जनाश्रयः ॥ १

धनदो निर्गुणश्शूरो वीरो निधिपतिर्मुनिः ।
पिङ्गाक्षो वरदो वाग्मी सीताशोकविनाशकः ॥ २

शिवश्शर्वः परो व्यक्तो व्यक्ताव्यक्तो धराधरः ।

पिङ्गकेशः पिङ्गरोमा श्रुतिगम्यस्सनातनः ॥ ३
अनादिर्भगवान् देवो विश्वहेतुर्जनाश्रयः ।
आरोग्यकर्ता विश्वेशो विश्वनाथो हरीश्वरः ॥ ४
भर्गो रामो रामभक्तः कल्याणः प्रकृतिस्थिरः ।
विश्वम्भरो विश्वमूर्तिर्विश्वाकारश्च विश्वपः ॥ ५
विश्वात्मा विश्वसेव्योऽथ विश्वो विश्वहरो रविः ।
विश्वचेष्टो विश्वगम्यो विश्वध्येयः कलाधरः ॥ ६
प्लवङ्गमः कपिश्रेष्ठो ज्येष्ठो विद्यावनेचरः ।
बालो वृद्धो युवा तत्त्वं तत्त्वगम्यस्सुखो ह्यजः ॥ ७

अञ्जनासूनुरव्यग्रो ग्रामशान्तो धराधरः ।
भूर्भुवस्स्वर्महर्लोको जनोलोकस्तपोऽव्ययः ॥ ८
सत्यमोङ्कारगम्यश्च प्रणवो व्यापकोऽमलः ।
शिवो धर्मप्रतिष्ठाता रामेष्टः फल्गुनप्रियः ॥ ९
गोष्पदीकृतवाराशिः पूर्णकामो धरापतिः ।
रक्षोघ्नः पुण्डरीकाक्षश्शरणागतवत्सलः ॥ १०
जानकीप्राणदाता च रक्षःप्राणापहारकः ।
पूर्णसत्त्वः पीतवासाः दिवाकरसमप्रभः ॥ ११
द्रोणहर्ता शक्तिनेता शक्तिराक्षसमारकः ।
रक्षोघ्नो रामदूतश्च शाकिनीजीवहारकः ॥ १२

भुभुक्कारहतारातिगर्वः पर्वतभेदनः ।
हेतुमान् प्रांशुबीजश्च विश्वभर्ता जगद्गुरुः ॥ १३
जगत्त्राता जगन्नाथो जगदीशो जनेश्वरः ।
जगत्पिता हरिश्श्रीशो गरुडस्मयभञ्जनः ॥ १४
पार्थध्वजो वायुपुत्त्रोऽमितपुच्छोऽमितप्रभः ।
ब्रह्मपुच्छः परब्रह्मपुच्छो रामेष्ट एवच ॥ १५
सुग्रीवादियुतो ज्ञानी वानरो वानरेश्वरः ।
कल्पस्थायी चिरञ्जीवी प्रसन्नश्च सदाशिवः ॥ १६
सन्नतिस्सद्गतिर्भुक्तिमुक्तिदः कीर्तिदायकः ।

कीर्तिः कीर्तिप्रदश्चैव समुद्रश्श्रीप्रदश्शिवः ॥ १७
उदधिक्रमणो देवस्संसारभयनाशनः ।
वार्धिबन्धनकृद्विश्वजेता विश्वप्रतिष्ठितः ॥ १८
लङ्कारिः कालपुरुषो लङ्केशगृहभञ्जनः ।
भूतावासो वासुदेवो वसुस्त्रिभुवनेश्वरः ॥ १९
श्रीरामदूतः कृष्णश्च लङ्काप्रासादभञ्जकः ।
कृष्णःकृष्णस्तुतश्शान्तश्शान्तिदो विश्वपावनः ॥ २०
विश्वभोक्ता च मारीघ्नः ब्रह्मचारी जितेन्द्रियः ।
ऊर्ध्वगो लाङ्गुली माली लाङ्गूलहतराक्षसः ॥ २१
समीरतनुजो वीरो वीरमारो जयप्रदः ।

जगन्मङ्गळदः पुण्यः पुण्यश्रवणकीर्तनः ॥ २२
पुण्यकीर्तिः पुण्यगतिर्जगत्पावनपावनः ।
देवेशो जितरोधश्च रामभक्तिविधायकः ॥ २३
ध्याता ध्येयो नभस्साक्षी चेतश्चैतन्यविग्रहः ।
ज्ञानदः प्राणद प्राणो जगत्प्राणस्समीरणः ॥ २४
विभीषणप्रियश्शूरः पिप्पलाश्रयसिद्धिदः ।
सुहृत्सिद्धाश्रयः कालः कालभक्षकभर्जितः ॥ २५
लङ्केशनिधनस्थायी लङ्कादाहक ईश्वरः ।
चन्द्रसूर्याग्निनेत्रश्च कालाग्निः प्रळयान्तकः ॥ २६

कपिलः कपिशः पुण्यराशिर्द्वादशराशिगः ।
सर्वाश्रयोऽप्रमेयात्मा रेवत्यादिदिवाकरः ॥ २७

लक्ष्मणप्राणदाता च सीताजीवनहेतुकः ।
रामध्येयो हृषीकेशो विष्णुभक्तो जटी बली ॥ २८

देवारिदर्पहा होता कर्ता हर्ता जगत्प्रभुः ।
नगरग्रामपालश्च शुद्धो बुद्धो निरन्तरः ॥ २९

निरञ्जनो निर्विकल्पो गुणातीतो भयङ्करः ।
हनुमांश्च दुराराध्यस्तपस्साध्योऽमरेश्वरः ॥ ३०

जानकीघनशोकोत्थतापहर्ता परात्परः ।

वाङ्मयस्सदसद्रूपः कारणं प्रकृतेः परः ॥ ३१

भाग्यदो निर्मलो नेता पुच्छलङ्काविदाहकः ।
पुच्छबद्धयातुधानो यातुधानरिपुप्रियः ॥ ३२
छायापहारी भूतेशो लोकेशस्सद्गतिप्रदः ।
प्लवङ्गमेश्वरः क्रोधः क्रोधसंरक्तलोचनः ॥ ३३
क्रोधहर्ता तापहर्ता भक्ताभयवरप्रदः ।
भक्तानुकम्पी विश्वेशः पुरुहूतः पुरन्दरः ॥ ३४
अग्निर्विभावसुर्भास्वान् यमो निर्ऋतिरेवच ।
वरुणो वायुगतिमान् वायुः कौबेर ईश्वरः ॥ ३५
रविश्चन्द्रः कुजस्सौम्यो गुरुः काव्यो शनैश्चरः ।

राहुः केतुर्मरुद्धोता धाता हर्ता समीरजः ॥ ३६
मशकीकृतदेवारिः दैत्यारिर्मधुसूदनः ।
कामः कपिः कामपालः कपिलो विश्वजीवनः ॥ ३७
भागीरथीपदाम्भोजस्सेतुबन्धविशारदः ।
स्वाहा स्वधा हविः कव्यं हव्यकव्यप्रकाशकः ॥ ३८
स्वप्रकाशो महावीरो लघुश्चाऽमितविक्रमः ।
प्रडीनोड्डीनगतिमान् सद्गतिः पुरुषोत्तमः ॥ ३९
जगदात्मा जगद्योनिर्जगदन्तोह्यनन्तकः ।
विपाप्मा निष्कलङ्कश्च महान् महदहङ्कृतिः ॥ ४०

खं वायुः पृथिवी ह्यापो वह्निर्दिक्पाल एव च ।

क्षेत्रज्ञः क्षेत्रपालश्च पल्वलीकृतसागरः ॥ ४१
हिरण्मयः पुराणश्च खेचरो भूचरो मनुः ।
हिरण्यगर्भस्सूत्रात्मा राजराजो विशांपतिः ॥ ४२
वेदान्तवेद्योद्गीथश्च वेदवेदाङ्गपारगः ।
प्रतिग्रामस्थितस्साध्यस्स्फूर्तिदाता गुणाकरः ॥ ४३
नक्षत्रमाली भूतात्मा सुरभिः कल्पपादपः ।
चिन्तामणिर्गुणनिधिः प्रजापतिरनुत्तमः ॥ ४४
पुण्यश्लोकः पुरारातिर्ज्योतिष्मान् शार्वरीपतिः ।
किलिकिल्यारवत्रस्तभूतप्रेतपिशाचकः ॥ ४५

ऋणत्रयहरस्सूक्ष्मस्स्थूलस्सर्वगतः पुमान् ।
अपस्मारहरस्मर्ता श्रुतिर्गाधा स्मृतिर्मनुः ॥ ४६
स्वर्गद्वारः प्रजाद्वारो मोक्षद्वारः कपीश्वरः ।
नादरूपः परब्रह्मा ब्रह्मब्रह्मा पुरातनः ॥ ४७
एको नैको जनश्शुक्लस्स्वयंज्योतिरनाकुलः ।
ज्योतिर्ज्योतिरनादिश्च सात्त्विको राजसत्तमः ॥ ४८
तमोहर्ता निरालम्बो निराकारो गुणाकरः ।
गुणाश्रयो गुणमयो बृहत्कायो बृहद्यशाः ॥ ४९
बृहद्धनुर्बृहत्पादो बृहन्मूर्धा बृहत्स्वनः ।

बृहत्कर्णो बृहन्नासो बृहन्नेत्रो बृहद्गलः ॥ ५०

बृहद्गतिर्बृहत्सेव्यो बृहल्लोकफलप्रदः ॥ ५१
बृहच्छक्तिर्बृहद्वाञ्छाफलदो बृहदीश्वरः ।
बृहल्लोकनुतो द्रष्टा विद्यादाता जगद्गुरुः ॥ ५२
देवाचार्यस्सत्यवादी ब्रह्मवादी कळाधरः ।
सप्तपाताळगामी च मलयाचलसंश्रयः ॥ ५३
उत्तराशास्थितश्श्रीदो दिव्यौषधवशः खगः ।
शाखामृगः कपीन्द्रश्च पुराणश्श्रुतिसञ्चरः ॥ ५४
चतुरो ब्राह्मणो योगी योगगम्यः परात्परः ।
अनादिनिधनो व्यासो वैकुण्ठः पृथिवीपतिः ॥ ५५

पराजितो जितारातिस्सदानन्दश्च ईशिता ।
गोपालो गोपतिर्गोप्ता कलिः कालः परात्परः ॥ ५६

मनोवेगी सदायोगी संसारभयनाशनः ।
तत्त्वदाता च तत्त्वज्ञस्तत्त्वं तत्त्वप्रकाशकः ॥ ५७

शुद्धो बुद्धो नित्यमुक्तो युक्ताकारो जयप्रदः ।
प्रळयोऽमितमायश्च मायातीतो विमत्सरः ॥ ५८

मायानिर्जितरक्षश्च मायानिर्मितविष्टपः ।
मायाश्रयश्च निर्लेपो मायानिर्वञ्चकस्सुखः ॥ ५९

सुखी सुखप्रदो नागो महेशकृतसंस्तवः ।

महेश्वरस्सत्यसन्धश्शरभः कलिपावनः ॥ ६०

रसो रसज्ञस्सम्मानस्तपश्चक्षुश्च भैरवः ।
घ्राणो गन्धस्स्पर्शनञ्च स्पर्शोऽहङ्कारमानदः ॥ ६१
नेतिनेतीति गम्यश्च वैकुण्ठभजनप्रियः ।
गिरीशो गिरिजाकान्तो दुर्वासाः कविरङ्गिराः ॥ ६२
भृगुर्वसिष्ठश्चच्यवनस्तुम्बुरुर्नारदोऽमलः ।
विश्वक्षेत्रं विश्वबीजं विश्वनेत्रश्च विश्वपः ॥ ६३
याजको यजमानश्च पावकः पितरस्तथा ।
श्रद्धा बुद्धिः क्षमा तन्द्रा मन्त्रो मन्त्रयुतस्स्वरः ॥ ६४
राजेन्द्रो भूपतिः कण्ठमाली संसारसारथिः ।

नित्यस्सम्पूर्णकामश्च भक्तकामधुगुत्तमः ॥ ६५

गणपः कीशपो भ्राता पिता माता च मारुतिः ।

सहस्रशीर्षा पुरुषः सहस्राक्षस्सहस्रपात् ॥ ६६

कामजित्कामदहनः कामः काम्यफलप्रदः ।

मुद्राहारी च रक्षोघ्नः क्षितिभारहरोबलः ॥ ६७

नखदंष्ट्रायुधो विष्णुभक्तोऽभयवरप्रदः ।

दर्पहा दर्पदो दृप्तश्शतमूर्तिरमूर्तिमान् ॥ ६८

महानिधिर्महाभोगो महाभागो महार्थदः ।

महाकारो महायोगी महातेजा महाद्युतिः ॥ ६९



महाकर्मा महानादो महामन्त्री महामतिः

महाशयो महोदारो महादेवात्मको विभुः ॥ ७०
रुद्रकर्मा क्रूरकर्मा रत्ननाभः कृतागमः ।
अम्भोधिलङ्घनस्सिंहो नित्यो धर्मः प्रमोदनः ॥ ७१
जितामित्रो जयस्सामो विजयो वायुवाहनः ।
जीवदाता सहस्रांशुर्मुकुन्दो भूरिदक्षिणः ॥ ७२
सिद्धार्थस्सिद्धिदस्सिद्धसङ्कल्पस्सिद्धिहेतुकः ।
सप्तपाताळचरणस्सप्तर्षिगणवन्दितः ॥ ७३
सप्ताब्धिसङ्गमो वीरस्सप्तद्वीपोरुमण्डलः ।
सप्ताङ्गराज्यसुखदस्सप्तमातृनिषेवितः ॥ ७४

सप्तलोकैकमकुटस्सप्तहोता स्वराश्रयः ।
सप्तच्छन्दोनिधिस्सप्तच्छन्दस्सप्तजनाश्रयः ॥ ७५

सप्तसामोपगीतश्च सप्तपाताळसंश्रयः ।
मेधावी कीर्तिदश्शोकहारी दौर्भाग्यनाशनः ॥ ७६

सर्ववश्यकरो भर्गो दोषघ्नः पुत्त्रपौत्रदः ।
प्रतिवादिमुखस्तम्भो दुष्टचित्तप्रसादनः ॥ ७७

पराभिचारशमनो दुःस्वप्नो बन्धमोक्षदः ।
नवद्वारपुराधारो नवद्वारनिकेतनम् ॥ ७८

नरनारायणस्तुत्यो नरनाथो महेश्वरः ।
मेखली कवची खड्गी भ्राजिष्णुर्विष्णुसारथिः ॥ ७९

बहुयोजनविस्तीर्णपुच्छः पुच्छहतासुरः ।
दुष्टग्रहनिहन्ता च पिशाचग्रहघातुकः ॥ ८०
बालग्रहविनाशी च धर्मो नेता कृपाकरः ।
उग्रकृत्योग्रवेगश्च उग्रनेत्रश्शतक्रतुः ॥ ८१
शतमन्युस्तुतस्स्तुत्यः स्तुतिस्स्तोता महाबलः ।
समग्रगुणशाली च व्यग्रो रक्षोविनाशकः ॥ ८२
रक्षोघ्नहस्तो ब्रह्मेशश्श्रीधरो भक्तवत्सलः ।
मेघनादो मेघरूपो मेघवृष्टिनिवारकः ॥ ८३
मेघजीवनहेतुश्च मेघश्यामः परात्मकः ।

समीरतनयो बोद्धा तत्त्वविद्याविशारदः ॥ ८४
अमोघोऽमोघवृद्धिश्च इष्टदोऽनिष्टनाशकः ।
अर्थोऽनर्थापहारी च समर्थो रामसेवकः ॥ ८५
अर्थी धन्यस्सुराराातिः पुण्डरीकाक्ष आत्मभूः ।
सङ्कर्षणो विशुद्धात्मा विद्याराशिस्सुरेश्वरः ॥ ८६
अचलोद्धारको नित्यस्सेतुकृद्रामसारथिः ।
आनन्दः परमानन्दो मत्स्यः कूर्मो निधिश्शमः ॥ ८७
वराहो नारसिंहश्च वामनो जमदग्निजः ।
रामः कृष्णश्शिवो बुद्धिः कल्की रामाश्रयो हरः ॥ ८८

नन्दी भृङ्गी च चण्डी च गणेशो गणसेवितः।

कर्माध्यक्षस्सुराध्यक्षो विश्रमो जगतांपतिः ॥ ८९
जगन्नाथः कपिश्रेष्ठस्सर्वावासस्सदाश्रयः ।
सुग्रीवादिस्तुतश्शान्तस्सर्वकर्मा प्लवङ्गमः ॥ ९०
नखदारितरक्षश्च नखायुधविशारदः ।
कुशलस्सुघनश्शेषो वासुकिस्तक्षकस्स्वरः ॥ ९१
स्वर्णवर्णो बलाढ्यश्च रामपूज्योऽघनाशनः ।
कैवल्यदीपः कैवल्यो गरुडः पन्नगो गुरुः ॥ ९२
किल्यारावहतारातिगर्वः पर्वतभेदनः ।
वज्राङ्गो वज्रवेगश्च भक्तो वज्रनिवारकः ॥ ९३

नखायुधो मणिग्रीवो ज्वालामाली च भास्करः ।
प्रौढप्रतापस्तपनो भक्ततापनिवारकः ॥ १४
शरणं जीवनं भोक्ता नानाचेष्टो ह्यचञ्चलः ।
सुखस्थोऽष्टास्यहा दुःखशमनः पवनात्मजः ॥ १५
पावनः पवनः कान्तो भक्तागस्सहनोबलः ।
मेघनादरिपुर्मेघनादसंहृतराक्षसः ॥ १६
क्षरोऽक्षरो विनीतात्मा वानरेशस्सताङ्गतिः ।
श्रीकण्ठश्शितिकण्ठश्च सहायस्सहनायकः ॥ १७
अस्थूलस्त्वनणुर्भर्गो देवसंहृतिनाशनः ।
अध्यात्मविद्यासारश्च अध्यात्मकुशलस्सुधी: ॥ १८

अकल्मषस्सत्यहेतुस्सत्यगस्सत्यगोचरः ।
सत्यगर्भस्सत्यरूपस्सत्यं सत्यपराक्रमः ॥ ९९

अञ्जनाप्राणलिङ्गश्च वायुवंशोद्भवस्सुधीः ।
भद्ररूपो रुद्ररूपस्सुरूपश्चित्ररूपधृत् ॥ १००

मैनाकवन्दितस्सूक्ष्मदर्शनो विजयो जयः ।
क्रान्तदिङ्मण्डलो रुद्रः प्रकटीकृतविक्रमः ॥ १०१

कम्बुकण्ठः प्रसन्नात्मा ह्रस्वनासो वृकोदरः ।
लम्बोष्ठः कुण्डली चित्रमाली योगविदां वरः ॥ १०२

विपश्चित्कविरानन्दविग्रहोऽनन्यशासनः ।

फल्गुनीसूनुरव्यग्रो योगात्मा योगतत्परः ॥ १०३
योगवेद्यो योगकर्ता योगयोनिर्दिगम्बरः ।
अकारादिक्षकारान्तवर्णनिर्मितविग्रहः ॥ १०४
उलूखलमुखस्सिंहस्संस्तुतः परमेश्वरः ।
श्लिष्टजङ्घश्श्लिष्टजानुश्श्लिष्टपाणिश्शिखाधरः ॥ १०५
सुशर्माऽमितशर्मा च नारायणपरायणः ।
जिष्णुर्भविष्णू रोचिष्णुर्ग्रसिष्णुस्स्थाणुरेव च ॥ १०६
हरी रुद्रानुकृद्वृक्षकम्पनो भूमिकम्पनः ।
गुणप्रवाहसूत्रात्मा वीतरागस्स्तुतिप्रियः ॥ १०७
नागकन्याभयध्वंसी रुक्मवर्णः कपालभृत् ।

अनाकुलो भवोपायोऽनपायो वेदपारगः ॥ १०८
अक्षरः पुरुषो लोकनाथो रक्षःप्रभुर्दृढः ।
अष्टाङ्गयोगफलभुक् सत्यसन्धः पुरुष्टुतः ॥ १०९
श्मशानस्थाननिलयः प्रेतविद्रावणक्षमः ।
पञ्चाक्षरपरः पञ्चमातृको रञ्जनध्वजः ॥ ११०
योगिनीवृन्दवन्द्यश्च शत्रुघ्नोऽनन्तविक्रमः ।
ब्रह्मचारीन्द्रियरिपुर्धृतदण्डो दशात्मकः ॥ १११
अप्रपञ्चस्सदाचारश्शूरसेनविदारकः ।
वृद्धः प्रमोदश्चानन्दस्सप्तजिह्वापतिर्धरः ॥ ११२

नवद्वारपुराधारः प्रत्यग्रस्सामगायकः ।
षट्चक्रधामा स्वर्लोकोभयहृन्मानदोऽमदः ॥ ११३
सर्ववश्यकरश्शक्तिर्नेता चानन्तमङ्गळः ।
अष्टमूर्तिधरो नेता विरूपस्स्वरसुन्दरः ॥ ११४
धूमकेतुर्महाकेतुस्सत्यकेतुर्महारथः ।
नन्दिप्रियस्स्वतन्त्रश्च मेखली समरप्रियः ॥ ११५
लोहाङ्गस्सर्वविद्धन्वी षट्कलश्शर्व ईश्वरः ।
फलभुक्फलहस्तश्च सर्वकर्मफलप्रदः ॥ ११६
धर्माध्यक्षो धर्मफलो धर्मो धर्मप्रदोऽर्थदः ।

पञ्चविंशतितत्त्वज्ञस्तारकब्रह्मतत्परः ॥ ११७

त्रिमार्गवसतिर्भीमस्सर्वदुःखनिबर्हणः ।
ऊर्जस्वान् निर्गळश्शूली माली गर्भो निशाचरः ॥ ११८
रक्ताम्बरधरो रक्तो रक्तमालाविभूषणः ।
वनमाली शुभाङ्गश्च श्वेतश्श्वेताम्बरो युवा ॥ ११९
जयो जयपरीवारस्सहस्रवदनः कविः ।
शाकिनी ढाकिनी यक्षरक्षोभूतौघभञ्जनः ॥ १२०
सद्योजातः कामगतिर्ज्ञानमूर्तिर्यशस्करः ।
शम्भुतेजास्सार्वभौमो विष्णुभक्तः प्लवङ्गमः ॥ १२१
चतुर्नवतिमन्त्रज्ञः पौलस्त्यबलदर्पहा ।

सर्वलक्ष्मीप्रदश्श्रीमानङ्गदप्रिय ईडितः ॥ १२२

स्मृतिर्बीजं सुरेशानस्संसारभयनाशनः ।

उत्तमश्श्रीपरीवारश्श्रीभूदुर्गोच कामदृक् ॥ १२३

सदागतिर्मातरिश्वा रामपादाब्जषट्पदः ।

नीलप्रियो नीलवर्णो नीलवर्णप्रियस्सुहृत् ॥ १२४

रामदूतो लोकबन्धुरन्तरात्मा मनोरमः ।

श्रीरामध्यानकृद्वीरस्सदा किंपुरुषस्तुतः ॥ १२५

रामकार्यान्तरङ्गश्च शुद्धिर्गतिरनामयः ।

पुण्यश्लोकः परानन्दः परेशः प्रियसारथिः ॥ १२६

लोकस्वामी मुक्तिदाता सर्वकारणकारणः ।

महाबलो महावीरः पारावारगतिर्गुरुः ॥ १२७

समस्तलोकसाक्षी च समस्तसुरवन्दितः ।
सीतासमेतश्रीरामपादसेवाधुरन्धरः ॥ १२८

इति श्रीसीतासमेत श्रीरामपादसेवाधुरन्धर श्रीमदाञ्जनेय-
सहस्रनामस्तोत्रम् समाप्तम् ॥

॥ श्रीरस्तु ॥

॥ श्रीरामाय नमः ॥

# ॥ श्रीमदांजनेयसहस्रनामावळिप्रारम्भः ॥



ओं हनुमते नमः
श्रीप्रदाय
वायुपुत्त्राय
रुद्राय
अनघाय

ओं अजराय नमः
अमृत्यवे
वीरवीराय
ग्रामावासाय
अनाश्रयाय १०

ओं धनदाय नमः
निर्गुणाय
शूराय
वीराय
निधिपतये
मुनये
पिङ्गाक्षाय
वरदाय
वाग्मिने

ओं सीताशोकविनाशकाय नमः २०
शिवाय
सर्वाय
पराय
अव्यक्ताय
व्यक्ताव्यक्ताय
धराधराय
पिङ्गकेशाय
पिङ्गरोम्णे

श्रुतिगम्याय
सनातनाय ३०
अनादये
भगवते
देवाय
विश्वहेतवे
जनाश्रयाय
आरोग्यकर्त्रे
विश्वेशाय
विश्वनाथाय

हरीश्वराय
भर्गाय ४०
रामाय
रामभक्ताय
कल्याणाय
प्रकृतिस्थिराय
विश्वम्भराय
विश्वमूर्तये
विश्वाकाराय
विश्वपाय

ओं विश्वात्मने नमः
विश्वसेव्याय ५०
विश्वाय
विश्वहराय
रवये
विश्वचेष्टाय
विश्वगम्याय
विश्वध्येयाय
कलाधराय

ओं प्लवङ्गमाय नमः
कपिश्रेष्ठाय
ज्येष्ठाय ६०
विद्यावनेचराय
बालाय
वृद्धाय
यूने
तत्त्वाय
तत्त्वगम्याय

सुखाय
अजाय
अञ्जनासूनवे
अव्यग्राय ७०
ग्रामशान्ताय
धराधराय
भूर्भुवस्स्वर्लोकाय
महर्लोकाय
जनोलोकाय
तपसे

अव्ययाय
सत्याय
ओङ्कारगम्याय
प्रणवाय ८०
व्यापकाय
अमलाय
शिवाय
धर्मप्रतिष्ठात्रे
रामेष्टाय
फल्गुनप्रियाय

ओं गोष्पदीकृतवाराशये नमः
पूर्णकामाय
धरापतये
रक्षोघ्नाय ९०
पुण्डरीकाक्षाय
शरणागतवत्सलाय
जानकीप्राणदात्रे
रक्षःप्राणापहारकाय
पूर्णसत्त्वाय

ओं पीतवाससे नमः
दिवाकरसमप्रभाय
द्रोणकर्त्रे
शक्तिनेत्रे
शक्त्यै १००
राक्षसमारकाय
रक्षोघ्नाय
रामदूताय
शाकिनीजीवहारकाय

| | |
|---|---|
| भुभुक्कारहतारातिगर्वाय | जगत्पित्रे |
| पर्वतभेदनाय | हरये |
| हेतुमते | श्रीशाय |
| प्रांशुबीजाय | गरुडस्मयभञ्जनाय |
| विश्वभर्त्रे | पार्थध्वजाय |
| जगद्गुरवे ११० | वायुत्त्राय १२० |
| जगत्त्रात्रे | अमितपुच्छाय |
| जगन्नाथाय | अमितप्रभाय |
| जगदीशाय | ब्रह्मपुच्छाय |
| जनेश्वराय | परब्रह्मणे |

ओं पुच्छाय नमः
रामेष्टाय
सुग्रीवादियुताय
ज्ञानिने
वानराय
वानरेश्वराय १३०
कल्पस्थायिने
चिरञ्जीविने
प्रसन्नाय

ओं सदाशिवाय नमः
सन्नतये
सद्गतये
भुक्तिमुक्तिदाय
कीर्तिदायकाय
कीर्त्यै
कीर्तिप्रदाय १४०
समुद्राय
श्रीप्रदाय

शिवाय
उदधिक्रमणाय
देवाय
संसारभयनाशनाय
वार्धिबन्धनकृते
विश्वजेत्रे
विश्वप्रतिष्ठिताय
लङ्कारये १५०
कालपूषाय
लङ्केशगृहभञ्जनाय

भूतावासाय
वासुदेवाय
वसवे
त्रिभुवनेश्वराय
श्रीरामदूताय
श्रीकृष्णाय
लङ्काप्रासादभञ्जकाय
श्रीकृष्णाय १६०
काणस्तुताय
शान्ताय

ओं शान्तिदाय नमः
विश्वपावनाय
विश्वभोक्त्रे
मारिघ्नाय
ब्रह्मचारिणे
जितेन्द्रियाय
ऊर्ध्वगाय
लाङ्गुलिने १७०
मालिने

ओं लाङ्गूलहतराक्षसाय नमः
समीरतनुजाय
वीराय
वीरमाराय
जयप्रदाय
जगन्मङ्गळदाय
पुण्याय
पुण्यश्रवणकीर्तनाय
पुण्यकीर्तये १८०

| | |
|---|---|
| पुण्यगतये | चैतन्यविग्रहाय |
| जगःपावनपावनाय | ज्ञानदाय |
| देवेशाय | प्राणदाय |
| जितरोषाय | प्राणाय |
| रामभक्तिविधायकाय | जगत्प्राणाय |
| ध्यात्रे | समीरणाय |
| ध्येयाय | विभीषणप्रियाय |
| नभसे | शूराय |
| साक्षिणे | पिप्पलाश्रयसिद्धिदाय |
| चेतसे १९० | सुहृदे २०० |

ओं सिद्धाश्रयाय नमः
कालाय
कालभक्षकभर्जिताय
लङ्केशनिधनाय
स्थायिने
लङ्कादाहकाय
ईश्वराय
चन्द्रसूर्याग्निनेत्राय
कालाग्नये

ओं प्रळयान्तकाय नमः २१०
कपिलाय
कपिशाय
पुण्यराशये
द्वादशराशिगाय
सर्वाश्रयाय
अप्रमेयात्मने
रेवत्यादिनिवारकाय
लक्ष्मणप्राणदात्रे

सीताजीवनहेतुकाय
रामध्येयाय २२०
हृषीकेशाय
विष्णुभक्ताय
जटिने
बलिने
देवारिदर्पघ्ने
होत्रे
कर्त्रे
हर्त्रे

जगत्प्रभवे
नगरग्रामपालाय २३०
शुद्धाय
बुद्धाय
निरन्तराय
निरञ्जनाय
निर्विकल्पाय
गुणातीताय
भयङ्कराय
हनुमते

ओं दुराराध्याय नमः
तपस्साध्याय २४०
अमरेश्वराय
जानकीघनशोकोत्थतापहर्त्रे
परात्पराय
वाङ्मयाय
सदसद्रूपाय
कारणाय
प्रकृतेः पराय

ओं भाग्यदाय नमः
निर्मलाय
नेत्रे २५०
पुच्छलङ्काविदाहकाय
पुच्छबद्धयातुधानाय
यातुधानरिपुप्रियाय
छायापहारिणे
भूतेशाय
लोकेशाय

सद्गतिप्रदाय
प्लवङ्गमेश्वराय
क्रोधाय
क्रोधसंरक्तलोचनाय २६०
क्रोधहर्त्रे
तापहर्त्रे
भक्ताभयवरप्रदाय
भक्तानुकम्पिने
विश्वेशाय
पुरुहूताय

पुरन्दराय
अग्नये
विभावसवे
भास्वते २७०
यमाय
निर्ऋतये
वरुणाय
वायुगतिमते
वायवे
कौबेराय

ओं ईश्वराय नमः
रवये
चन्द्राय
कुजाय २८०
सौम्याय
गुरवे
काव्याय
शनैश्चराय
राहवे
ओं केतवे नमः
मरुते
होत्रे
धात्रे
हर्त्रे २९०
समीरजाय
मशकीकृतदेवारये
दैत्यारये
मधुसूदनाय

कामाय
कपये
कामपालाय
कपिलाय
विश्वजीवनाय
भागीरथीपदाम्भोजाय ३००
सेतुबन्धविशारदाय
स्वाहायै
स्वधायै
हविषे

कव्याय
हव्यकव्यप्रकाशकाय
स्वप्रकाशाय
महावीराय
लघवे
अमितविक्रमाय ३१०
प्रडीनोड्डीनगतिमते
सद्गतये
पुरुषोत्तमाय
जगदात्मने

ओं जगद्योनये
जगदन्ताय
अनन्तकाय
विपाप्मने
निष्कलङ्काय
महते ३२०
महदहङ्कृतये
खाय
वायवे
ओं पृथिव्यै नमः
अद्भ्यः
वह्नये
दिक्पालाय
क्षेत्रज्ञाय
क्षेत्रपालाय
पल्वलीकृतसागराय ३३०
हिरण्मयाय
पुराणाय

खेचराय
भूचराय
मनवे
हिरण्यगर्भाय
सूत्रात्मने
राजराजाय
विशाम्पतये
वेदान्तवेद्याय १४०
उद्गीथाय
वेदवेदाङ्गपारगाय

प्रतिग्रामस्थिताय
साध्याय
स्फूर्तिदात्रे
गुणाकराय
नक्षत्रमालिने
भूतात्मने
सुरभये
कल्पपादपाय १५०
चिन्तामणये
गुणनिधये

ओं प्रजापतये नमः
अनुत्तमाय
पुण्यश्लोकाय
पुरारातये
ज्योतिष्मते
शार्वरीपतये
किलिकिल्यारवत्रस्तभूतप्रेतपिशाचकाय
ऋणत्रयहराय ३६०

ओं सूक्ष्माय नमः
स्थूलाय
सर्वगतये
पुंसे
अपस्मारहराय
स्मर्त्रे
श्रुतये
गाथायै

स्मृतये

मनवे १७०

स्वर्गद्वाराय

प्रजाद्वाराय

मोक्षद्वाराय

कपीश्वराय

नादरूपाय

परब्रह्मणे

ब्रह्मब्रह्मणे

पुरातनाय

एकाय

नैकाय १८०

जंनाय

शुक्लाय

स्वयंज्योतिषे

अनाकुलाय

ज्योतिर्ज्योतिषे

अनादये

ओं सात्त्विकाय नमः
राजसतमाय
तमोहर्त्रे
निरालम्बाय ३९०
निराकाराय
गुणाकराय
गुणाश्रयाय
गुणमयाय

ओं बृहत्कायाय नमः
बृहद्यशसे
बृहद्धनवे
बृहत्पादाय
बृहन्मूर्ध्ने
बृहत्स्वनाय ४००
बृहत्कर्णाय
बृहन्नासाय

बृहन्नेत्राय
बृहद्बलाय
बृहद्यत्नाय
बृहच्चेष्टाय
बृहत्पुच्छाय
बृहत्कराय
बृहद्गतये
बृहत्सैन्याय ४१०
बृहल्लोकफलप्रदाय

बृहच्छक्तये
बृहद्वांछाफलदाय
बृहदीश्वराय
बृहल्लोकनुताय
द्रष्ट्रे
विद्यादात्रे
जगद्गुरवे
देवाचार्याय
सत्यवादिने ४२०

ओं ब्रह्मवादिने नमः
कळाधराय
सप्तपाताळगामिने
मळयाचलसंश्रयाय
उत्तराशास्थिताय
श्रीदाय
दिव्यौषधवशाय
खगाय

ओं शाखामृगाय नमः
कपीन्द्राय ४३८
पुराणाय
श्रुतिसञ्चराय
चतुराय
ब्राह्मणाय
योगिने
योगगम्याय

| | | | |
|---|---|---|---|
| परात्पराय | | गोपालाय | |
| अनादिनिधनाय | | गोपतये | |
| व्यासाय | | गोप्त्रे | |
| वैकुण्ठाय | ४४० | कलये | |
| पृथिवीपतये | | कालाय | ४५० |
| भराजिताय | | परात्पराय | |
| जितारातये | | मनोवेगिने | |
| सदानन्दाय | | सदायोगिने | |
| ईशित्रे | | संसारभवनाशनाय | |

ओं तत्त्वदात्रे नमः
तत्त्वज्ञाय
तत्त्वाय
तत्त्वप्रकाशकाय
शुद्धाय
बुद्धाय ४६०
नित्यमुक्ताय
युक्ताकाराय

ओं जयप्रदाय नमः
प्रळयाय
अमितमायाय
मायातीताय
विमत्सराय
मायानिर्जितरक्षसे
मायानिर्मितविष्टपाय
मायाश्रयाय ४७०

निर्लेपाय
मायानिर्वञ्चकाय
सुखाय
सुखिने
सुखप्रदाय
नागाय
महेशकृतसंस्तवाय
महेश्वराय
सत्यसन्धाय

शरभाय ४८०
कलिपावनाय
रसाय
रसज्ञाय
सम्मानाय
तपश्चक्षुषे
भैरवाय
घ्राणाय
गन्धाय

ओं स्पर्शनाय नमः
स्पर्शाय
अहङ्काराय
मानदाय
नेतिनेतीतिगम्याय
वैकुण्ठभजनप्रियाय
गिरीशाय
गिरिजाकान्ताय

ओं दुर्वाससे नमः
कवये
अङ्गिरसे
भृगवे ५००
वसिष्ठाय
च्यवनाय
तुम्बुरवे
नारदाय

अमलाय
विश्वक्षेत्राय
विश्वबीजाय
विश्वनेत्राय
विश्वपाय
याजकाय ५१०
यजमानाय
पावकाय
पितृभ्यो

श्रद्धायै
बुद्ध्यै
क्षमायै
तन्द्रायै
मन्त्राय
मन्त्रयुताय
स्वराय ५२०
राजेन्द्राय
भूपतये

ओं कण्ठमालिने नमः
संसारसारथये
नित्याय
सम्पूर्णकामाय
भक्तकामधुहे
उत्तमाय
गणपाय
कीशपाय ५३०

ओं भ्रात्रे नमः
पित्रे
मात्रे
मारुतये
सहस्रशीर्ष्णे
पुरुषाय
सहस्राक्षाय
सहस्रपादे

कामजिते

कामदहनाय ५४०

कामाय

काम्यफलप्रदाय

मुद्राहारिणे

रक्षोघ्नाय

क्षितिभारहराय

खलाय

नखदंष्ट्रायुधाय

विष्णुभक्ताय

अभयवरप्रदाय

दर्पघ्ने ५५०

दर्पदाय

दृप्ताय

शतमूर्तये

अमूर्तिमते

महानिधये

महाभोगाय

ओं महाभागाय नमः
महार्थदाय
महाकाराय
महायोगिने ५६०
महातेजसे
महाद्युतये
महाकर्मणे
महानादाय

ओं महामन्त्राय नमः
महामतये
महाशयाय
महोदाराय
महादेवात्मकाय
विभवे ५७०
रुद्रकर्मणे
क्रूरकर्मणे

रत्ननाभाय

कृतागमाय

अम्भोधिलङ्घनाय

सिंहाय

नित्याय

धर्माय

प्रमोदनाय

जितामित्राय ५८०

जयाय

सामाय

विजयाय

वायुवाहनाय

जीवदात्रे

सहस्रांशवे

मुकुन्दाय

भूरिदक्षिणाय

सिद्धार्थाय

सिद्धिदाय ५९०

सिद्धसङ्कल्पाय
सिद्धिहेतुकाय
सप्तपाताळभरणाय
सप्तर्षिगणवन्दिताय
सप्ताब्धिसङ्क्रमाय
वीराय
सप्तद्वीपोरुमण्डलाय
सप्ताङ्गराज्यसुखदाय
सप्तमातृनिषेविताय
सप्तलोकैकमकुटाय ६००
सप्तहोत्रे
स्वराश्रयाय
सप्तच्छन्दोनिधये
सप्तच्छन्दसे
सप्तजनाश्रयाय
सप्तसामोपगीताय

सप्तपाताळसंश्रयाय
मेधाविने
कीर्तिदाय
शोकहारिणे ६१०
दौर्भाग्यनाशनाय
सर्ववश्यकराय
भर्गाय
दोषघ्नाय
पुत्रपौत्रदाय

प्रतिवादिमुखस्तम्भाय
दुष्टचित्तप्रसादनाय
पराभिचारशमनाय
दुःखघ्नाय
बन्धमोक्षदाय ६२०
नवद्वारपुराधाराय
नवद्वारनिकेतनाय
नरनारायणस्तुत्याय
नरनाथाय

सिद्धसङ्कल्पाय
सिद्धिहेतुकाय
सप्तपाताळभरणाय
सप्तर्षिगणवन्दिताय
सप्ताब्धिसङ्क्रमाय
वीराय
सप्तद्वीपोरुमण्डलाय
सप्ताङ्गराज्यसुखदाय

सप्तमातृनिषेविताय
सप्तलोकैकमकुटाय ६००
सप्तहोत्रे
स्वराश्रयाय
सप्तच्छन्दोनिधये
सप्तच्छन्दसे
सप्तजनाश्रयाय
सप्तसामोपगीताय

सप्तपातालसंश्रयाय
मेधाविने
कीर्तिदाय
शोकहारिणे ६१०
दौर्भाग्यनाशनाय
सर्ववश्यकराय
भर्गाय
दोषघ्नाय
पुत्रपौत्रदाय

प्रतिवादिमुखस्तम्भाय
दुष्टचित्तप्रसादनाय
पराभिचारशमनाय
दुःखघ्नाय
बन्धमोक्षदाय ६२०
नवद्वारपुराधाराय
नवद्वारनिकेतनाय
नरनारायणस्तुत्याय
नरनाथाय

ओं महेश्वराय नमः
मेखलिने
कवचिने
खड्गिने
भ्राजिष्णवे
विष्णुसारथये ६३०
बहुयोजनविस्तीर्णपुच्छाय
पुच्छहतासुराय

ओं दुष्टग्रहनिहन्त्रे नमः
पिशाचग्रहघातुकाय
बालग्रहविनाशिने
धर्मनेत्रे
कृपाकराय
उग्रकृत्याय
उग्रवेगाय
उग्रनेत्राय ६४०

शतक्रतवे

शतमन्युस्तुताय

स्तुत्याय

स्तुतये

स्तोत्रे

महाबलाय

समग्रगुणशालिने

व्यग्राय

रक्षोविनाशकाय

रक्षोघ्नहस्ताय ६५०

ब्रह्मेशाय

श्रीधराय

भक्तवत्सलाय

मेघनादाय

मेघरूपाय

मेघवृष्टिनिवारकाय

मेघजीवनहेतवे

मेघश्यामाय

ओं परात्मकाय नमः
समीरतनयाय ६६०
बोद्ध्रे
तत्वविद्याविशारदाय
अमोघाय
अमोघवृद्धये
इष्टदाय
अनिष्टनाशकाय

ओं अर्थाय नमः
अनर्थापहारिणे
समर्थाय
रामसेवकाय ६७०
अर्थिने
धन्याय
असुरारातये
पुण्डरीकाक्षाय

आत्मभुवे
सङ्कर्षणाय
विशुद्धात्मने
विद्याराशये
सुरेश्वराय
अचलोद्धारकाय ६८०
नित्याय
सेतुकृते
रामसारथये

आनन्दाय
परमानन्दाय
मत्स्याय
कूर्माय
निधये
शमाय
वराहाय ६९०
नारसिंहाय
वामनाय

ओं जमदग्निजाय नमः
रामाय
कृष्णाय
शिवाय
बुध्यै
कल्किने
रामाश्रयाय
हराय ७००

ओं नन्दिने नमः
भृङ्गिणे
चण्डिने
गणेशाय
गणसेविताय
कर्माध्यक्षाय
सुराध्यक्षाय
विश्रमाय

जगताम्पतये
जयन्नाथाय ७१०
कपिश्रेष्ठाय
सर्वावासाय
सदाश्रयाय
सुग्रीवादिस्तुताय
शान्ताय
सर्वकर्मणे
प्लवङ्गमाय

नखदारितरक्षसे
नखायुधविशारदाय
कुशलाय ७२०
सुघनाय
शेषाय
वासुकये
तक्षकाय
[illegible]
स्वर्णवर्णाय

ओं बलाढ्याय नमः
रामपूज्याय
अघनाशनाय
कैवल्यदीपाय ७३०
कैवल्याय
गरुडाय
पन्नगाय
गुरवे

ओं किल्यारावहतारातिगर्वाय नमः
पर्वतभेदनाय
वज्राङ्गाय
वज्रवेगाय
भक्ताय
वज्रनिवारकाय ७४०
नखायुधाय
मणिग्रीवाय

ज्वालामालिने
भास्कराय
प्रौढप्रतापाय
तपनाय
भक्ततापनिवारकाय
शरणाय
जीवनाय
ओके ७५०
नानाचेष्टाय

अचञ्चलाय
सुस्वस्थाय
अष्टास्यघ्ने
दुःखशमनाय
पवनात्मजाय
पावनाय
पवनाय
कान्ताय
भक्तागस्सहनाय ७६०

ॐ बलाय नमः
मेघनादरिपवे
मेघनादसंहृतराक्षसाय
क्षराय
अक्षराय
विनीतात्मने
वानरेशाय
[illegible]

ॐ श्रीकण्ठाय नमः
शितिकण्ठाय ७७०
सहायाय
सहनायकाय
अस्थूलाय
अनणवे
भर्गाय
देवाय

संसृतिनाशनाय
अध्यात्मविद्यासागराय
अध्यात्मकुशलाय
सुधिये ७८०
अकल्मषाय
सत्यहेतवे
सत्यगाय
सत्यगोचराय
सत्यगर्भाय

सत्यरूपाय
सत्याय
सत्यपराक्रमाय
अञ्जनाप्राणलिङ्गाय
वायुवंशोद्भवाय ७९०
सुधिये
भद्ररूपाय
रुद्ररूपाय
सुरूपाय

ओं चित्ररूपधृते नमः
मैनाकवन्दिताय
सूक्ष्मदर्शनाय
विजयाय
जयाय
क्रान्तदिङ्मण्डलाय ८००
रुद्राय
प्रकटीकृतविक्रमाय

ओं कम्बुकण्ठाय नमः
प्रसन्नात्मने
ह्रस्वनासाय
वृकोदराय
लम्बोष्ठाय
कुण्डलिने
चित्रमालिने
योगविद्यावराय ८१०

विपश्चिते

कवये

आनन्दविग्रहाय

अनन्यशासनाय

फल्गुनीसूनवे

अन्यग्राय

योगात्मने

योगतत्पराय

योगवेद्याय

योगकर्त्रे ८२०

योगयोनये

दिगम्बराय [विग्रहाय

अकारादिक्षकारान्तवर्णनिर्मित

उलूखलमुखाय

सिंहाय

संस्तुताय

परमेश्वराय

श्लिष्टजङ्घाय

ओं श्लिष्टजानवे नमः
श्लिष्टपाणये ८३०
शिखाधराय
सुशर्मणे
अमितशर्मणे
नारायणपरायणाय
जिष्णवे
भविष्णवे
रोचिष्णवे
ग्रसिष्णवे
स्थाणवे
हरये ८४०
रुद्रानुकृते
वृक्षकम्पनाय
भूमिकम्पनाय
गुणप्रवाहाय

सूत्रात्मने
वीतरागाय
स्तुतिप्रियाय
नागकन्यामयध्वंसिने
रुक्मवर्णाय
कपालभृते ८५०
अनाकुलाय
भवोपायाय
अनपायाय

वेदपारगाय
अक्षराय
पुरुषाय
लोकनाथाय
रक्षः प्रभवे
दृढाय
अष्टाङ्गयोगफलभुजे ८६०
सत्यसन्धाय
पुरुष्टुताय

ओं श्मशानस्थाननिलयाय नमः
प्रेतविद्रावणक्षमाय
पञ्चाक्षरपराय
पञ्चमातृकाय
रञ्जनध्वजाय
योगिनीबृन्दवन्द्याय
शत्रुघ्नाय
अनन्तविक्रमाय ८७०

ओं ब्रह्मचारिणे नमः
इन्द्रियरिपवे
धृतदण्डाय
दशात्मकाय
अप्रपञ्चाय
सदाचाराय
शूरसेनविदारकाय
वृद्धाय

प्रमोदाय

आनन्दाय ८८०

सप्तजिह्वापतये

धराय

नवद्वारपुराधाराय

प्रत्यग्राय

सामगायकाय

षट्चक्रधाम्ने

स्वलोकाय

भयहृते

मानदाय

अमदाय ८९०

सर्ववश्यकराय

शक्त्यै

नेत्रे

अनन्तमङ्गलाय

अष्टमूर्तिधराय

नेत्रे

ओं विरूपाय नमः
स्वरसुन्दराय
धूमकेतवे
महाकेतवे ९००
सत्यकेतवे
महारथाय
नन्दिप्रियाय
स्वतन्त्राय

ओं मेखलिने नमः
समरप्रियाय
लोहाङ्गाय
सर्वविदे
धन्विने
षट्कलाय ९१०
शर्वाय
ईश्वराय

फलभुजे
फलहस्ताय
सर्वकर्मफलप्रदाय
धर्माध्यक्षाय
धर्मफलाय
धर्माय
धर्मप्रदाय
अर्थदाय ९२०
पञ्चविंशतितत्त्वज्ञाय

तारकब्रह्मतत्पराय
त्रिमार्गवसतये
भीमाय
सर्वदुःखनिबर्हणाय
ऊर्जस्वते
निर्गळाय
शूलिने
मालिने
गर्भाय ९३०

ओं निशाचराय नमः
रक्ताम्बरधराय
रक्ताय
रक्तमालाविभूषणाय
वनमालिने
शुभाङ्गाय
श्वेताय
श्वेताम्बराय

ओं यूने नमः
जयाय ९४०
जयपरीवाराय
सहस्रवदनाय
कवये
शाकिनी डाकिनी यक्ष रक्षो भूतोघंभञ्जनाय
सद्योजाताय

कामगतये

ज्ञानमूर्तये

यशस्कराय

शम्भुतेजसे

सार्वभौमाय १५०

विष्णुभक्ताय

प्लवङ्गमाय

चतुर्नवतिमन्त्रज्ञाय

पौलस्त्यबलदर्पघ्ने

सर्वलक्ष्मीप्रदाय

श्रीमते

अङ्गदप्रियाय

ईडिताय

स्मृतये

बीजाय १६०

सुरेशानाय

संसारभयनाशनाय

उत्तमाय

ओं श्रियै
भुवे
दुर्गायै
कामदृशे
सदागतये
मातरिश्वने १७०
रामपादाब्जषट्पदाय
नीलप्रियाय

ओं नीलवर्णाय नमः
नीलवर्णप्रियाय
सुहृदे
रामदूताय
लोकबन्धवे
अन्तरात्मने
मनोरमाय
श्रीरामध्यानकृते १८०

वीराय
सदाकिंपुरुषस्तुताय
रामकार्यान्तरङ्गाय
शुद्ध्यै
गत्यै
अनामयाय
पुण्यश्लोकाय
परानन्दाय
परेशाय

प्रियसारथये १९०
लोकस्वामिने
मुक्तिदात्रे
सर्वकारणकारणाय
महाबलाय
महावीराय
पारावारगतये
गुरवे
समस्तलोकसाक्षिणे

ओं समस्तसुरवन्दिताय नमः

सीतासमेत श्रीरामपादसेवाधुरन्धराय १०००

श्रीमते हनुमते नमः

श्रीमदाञ्जनेयसहस्रनामावळिः समाप्ता ॥

---